॥ श्रीवेङ्कटेशपञ्चकस्तोत्रम् ॥

श्रीधराधिनायकं श्रितापवर्गदायकं
श्रीगिरीशमित्रमम्बुजेक्षणं विचक्षणम् ।
श्रीनिवासमादिदेवमक्षरं परात्परं
नागराङ्गिरीश्वरं नमामि वेङ्कटेश्वरम् ॥ १॥

उपेन्द्रमिन्दुशेखरारविन्दजामरेन्द्र
बृन्दारकादिसेव्यमानपादपङ्कजद्वयम् ।
चन्द्रसूर्यलोचनं महेन्द्रनीलसन्निभम्
नागराङ्गिरीश्वरं नमामि वेङ्कटेश्वरम् ॥ २॥

नन्दगोपनन्दनं सनन्दनादिवन्दितं
कुन्दकुट्मलाग्रदन्तमिन्दिरामनोहरम् ।
नन्दकारविन्दशङ्खचक्रशार्ङ्गसाधनं
नागराङ्गिरीश्वरं नमामि वेङ्कटेश्वरम् ॥ ३॥

नागराजपालनं भोगिनाथशायिनं
नागवैरिगामिनं नगारिशत्रुसूदनम् ।
नागभूषणार्चितं सुदर्शनाद्युदायुधं
नागराङ्गिरीश्वरं नमामि वेङ्कटेश्वरम् ॥ ४॥

तारहीरक्षीरशार [तारहीरशार] दाभ्रतारकेशकीर्ति [सं]
विहार [हारहार] मादिमध्य् [म] आन्तशून्यमव्ययम् ।
तारकासुराटवीकुठारमद्वितीयकं
नागराङ्गिरीश्वरं नमामि वेङ्कटेश्वरम् ॥ ५॥

॥ इति श्रीवेङ्कटेश्वरपञ्चकस्तोत्रं सम्पूर्णम् ॥

॥ श्रीवेङ्कटेश्वरार्पणमस्तु ॥
॥ श्रीरस्तु ॥